॥ भगवत्स्तुती ब्रह्मवैवर्तपुराणे ॥

अथ त्रिंशोऽध्ययः ।
श्रीनारायण उवाच ।

लम्बोदरो हरिरूमापतिरादिशेषब्रह्मादयः सुरगणा मनवो मुनीन्द्राः ।
वाणीशिवात्रिपथगाकमलादिकाश्च संचिन्तयेभ्दगवतश्चरणारविन्दम् ॥ १॥

सन्सारसागरमतीव गभीरघोरं दावाग्निसर्पपरिवेष्टितेचेष्टिताङ्गम् ।
संलङ्घ्य गन्तुमभिवाञ्छति यो हि दास्यं संचिन्तयेद्भगवतश्चरणारविन्दम् ॥ २॥

गोवर्धनोद्धरणकीर्तिरतीवखिन्ना भूर्धारिता च दशनाग्रत एव चाऽऽद्रा ।
विश्वानि लोमविवरेषु बिभर्तुरादेः संचिन्त्येद्भगवतश्चरणारविन्दम् ॥ ३॥

वेदाङ्गवेदमुखनिःसृत्कीर्तिरंशैर्वेदाङ्ग्वेदजनकस्य हरेर्विधातुः ।
जन्मान्तकादिभयशोकविदीर्णदेह्ः संचिन्त्येद्भगवतश्चरणारविन्दम् ॥ ४॥

गोपाङ्गनावदनपङ्जषट्पदस्य रासेश्वरस्य रसिकारमणस्य पुंस्ः ।
वृन्दावने विहरतो व्रज्वेषविष्णोः संचिन्त्येद्भगवतश्चरणारविन्दम् ॥ ५॥

चक्षुर्निमेषपतितो जगतां विधाता तत्कर्म वत्स कथितुं भुवि कः समर्थः ।
त्वं चापि नारदमुने परमादरेण सञ्चिन्तनं कुरु हरेश्चरणारविन्दम् ॥ ६॥

यूयं वयं तस्य कलाकलांशाः कलाकलांशाः मनवो मुनीन्द्राः ।
कलाविशेषा भवपाद्ममुख्या महान्विराङ् यस्य कलाविशेषः ॥ ७॥

सहश्रशीर्षा शिरसः प्रदेशे बिभर्ति सिधार्थसमं च विश्वम् ।
कूर्मे च शेषो मश्को गजे यथा कूर्मश्च कृष्णस्य कलाकलांशः ॥ ८॥

गोलोकनाथस्य विभोर्यशोऽमलं श्रुतौ पुराणे नहि किंचन स्फुटम् ।
न पाद्ममुख्याः कथितुं समर्थाः सर्वेश्वरं तं भज पाद्मपुत्र ॥ ९॥

विश्वेषु सर्वेषु च विश्वधाम्नः सन्त्येव शश्वद्विधिविष्णुरुद्राः ।
तेषां च संख्याः श्रुतयश्च देवाः परं न जानन्ति तमीश्वरं भज ॥ १०॥

करोति सृष्टिं स विधेर्विधाता विधाय नित्यां प्रकृतिं जगत्प्रसूम् ।
ब्रह्मादयः प्राकृतिकाश्च सर्वे भक्तिप्रदां श्रीं प्रकृतिं भजन्ति ॥ ११॥

ब्रह्मस्वरुपा प्रकृतिर्न भिन्ना यया च सृष्टिं कुरुते सनातनः ।
स्त्रियश्च सर्वाः कलया जगत्सु माया च सर्वे च तया विमोहिताः ॥ १२॥

नारायणी सा परमा सनातनी शक्तिश्च पुंसः परमात्मनश्च ।
आत्मेश्वरश्चापि यया च शक्तिमांस्तया विना स्रष्टुमशक्त एव ॥ १३॥

गत्वा विवाहं कुरु वत्स सांप्रतं कर्तु प्रयुक्तश्च पितुर्निर्देशः ।
गुरोर्निदेशप्रतिपालको भवेः सर्वत्र पूज्यो विजयी च संततम् ॥ १४॥

स्वपत्नीं पूज्येधो हि वस्त्रालंकारचन्दनैः ।
प्रकृतिसतस्य संतुष्टा यथा कृष्णो द्विजार्चने ॥ १५॥

सा च योषित्स्वरुपा च प्रतिविश्वेषु मायया ।
योषितामपमानेन पराभूता च सा भवेत् ॥ १६॥

दिव्या स्त्री पूजिता येन पतिपुत्रवती सती ।
प्रकृतिः पूजिता तेन सर्वमङ्गलदायिनी ॥ १७॥

मूलप्रकृतिरेका सा पूर्णब्रह्मास्वरुपिणी ।
सृष्टौ पञ्चविधा सा च विष्णुमाया सनातनी ॥ १८॥

प्राणाधिष्ठातृदेवी या कृष्णस्य परमात्मनः ।
सर्वासां प्रेयसी कान्ता सा राधा परिकीरिता ॥ १९॥

नारायणप्रिया लक्ष्मीः सर्वसम्पत्स्वरुपिणी ।
वागधिष्ठातृदेवी या सा च पूज्या सरस्वती ॥ २०॥

सावित्री वेदमाता च पूज्यरूपा विधेः प्रिया ।
शंकरस्य प्रिया दुर्गा यस्याः पुत्रो गणेश्वरः ॥ २१॥

इति श्रीब्रह्म्वैवर्ते महापुराणे ब्रह्म्खण्डे सौतिशौनकसंवादे
भगवत्स्तुतितत्स्वरुपमायास्वरूपवर्णनं नाम त्रिंशोऽध्यायः ॥ ३०॥